तुष्टे हुताशने तस्य भक्तिर्भवति भास्करे ॥
पूजां करोति सततमादित्यस्य ततो द्विजाः ॥
प्रसन्ने भास्करे तस्य भक्तिर्भवति तत्त्वतः ॥
सेवां करोति विधिवत् सतु शंभोः प्रयत्नतः ॥
तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशवे ॥
संपूज्य तं जगन्नाथं वासुदेवाख्यमव्ययं ॥
ततो भुक्तिं च मुक्तिं च स प्राप्नोति द्विजोत्तमाइति ॥
तस्मान्मुख्यतया संप्रदायशब्दप्रवृत्तिर्वैष्णवसंप्रदायेष्वेवे-
त्यप्याहुः ॥ तस्मात् ॥
सम्यक् प्रकृष्टं दानं स मंत्रादेः श्रुतिमूलकम् ॥
इत्यर्थः संप्रदायेति शब्दस्योक्तः पुरातनैः ॥ १ ॥

---

શ્રીસૂર્યનારાયણની ભક્તિ કરવાનું મન થાયછે, તેથી તે નિરન્તર સૂર્યનું આરાધન કરે છે. સૂર્ય પ્રસન્ન થતાં, શ્રી શિવજીની પૂજા કરવાની ઇચ્છા થાયછે. પ્રયત્ન અને વિધિપૂર્વક શિવપૂજનથી શિવ પ્રસન્ન થાયછે. શિવ પ્રસન્ન થતાં, અવ્યય, જગન્નાથ, શ્રી વાસુદેવ નામક કેશવ પરમાત્માની સેવા કરવાની ઇચ્છા થાયછે. અને તે સેવાથી ભોગ અને મોક્ષ બેઉ મળેછે.

માટે મુખ્યત્વે કરીને વૈષ્ણવ સંપ્રદાય ઉપરજ સંપ્રદાય શબ્દની પ્રવૃત્તિ છે, એમ કહ્યું છે. માટે સમ્યક (ઉત્તમ) પ્રકૃષ્ટ (શ્રેષ્ઠ) દાય (દાન) "તે મંત્રાદિકનું શ્રુતિમૂલકદાન" એવો **સંપ્રદાય** શબ્દનો અર્થ, પ્રાચીન વિદ્વાન લોકોએ કહ્યો છે.



# भारतमार्तंडपंडितश्रीगट्टूलालजीविरचिता मुद्रितग्रंथाः.



| संस्कृत. | न्योछावर. | डाकखर्च. |
| --- | --- | --- |
| वेदान्तचिन्तामणि ... ... ... ... | ·॥· | )= |
| श्रीकृष्णाभिसारकाव्य ... ... ... | ·।· | )– |
| श्रीवल्लभस्तुतिरत्नावलिटीका ... ... ... | १ | )= |
| घटखर्परकाव्यटीका... ... ... ... | ·॥= | )= |
| मारुतशक्ति(सहस्राक्षखंडन) ... ... ... | ५ | ·॥· |
| सत्सिद्धांतमार्तंड ... ... ... ... | ५ | ·॥· |

## गूजराती.

| | | |
| --- | --- | --- |
| दशावतारस्तोत्र.... ... ... ... | )– | –)॥ |
| समश्लोकी गीता ... ... ... ... | १ | )= |
| हृदयदूतसार ... ... ... ... | ·।· | )– |
| भुकुंडचरित्र ... ... ... ... | )= | )– |
| चाणाक्यनी चतुराई ... ... ... | १ | )= |
| बृहत्कथासारलंबक १. ... ... ... | १॥ | ·।· |
| सुमनोविनोद ... ... ... ... | १ | )= |
| कामंदकीयनीतिसार ... ... ... | ·।– | )– |
| नीतिनिदर्शन ... ... ... ... | ·।· | )– |

उपलां पुस्तको पंडितश्री गट्टूलालजी धर्मपुस्तकालय मुंबईमां मळे छे.

# भारतमार्तंडवेदांतभट्टाचार्याशुकवीश्वरश-
# तावधानिपंडितचक्रचूडामणिपंचन-
# द्युपाह्वश्रीमद्गोवर्धनशर्मणः
# ( गट्टूलाल. )
# लघुजीवनचरितम्.

व्यतिकरितदिगंताः श्वेतमानैर्यशोभिः
सुकृतविलसितानां स्थानमूर्जस्वलानाम् ।
अकलितमहिमानः केतनं मंगलानां
कथमपि भुवनेऽस्मिंस्तादृशाः संभवंति ॥

भवभूतिः

एतेषां प्राकट्यकालस्तु भूखांकभू(१९०१)मिते विक्रमाब्दे पौषकृष्णद्वादश्यां सोमवासरे कोटाख्यराजधान्यामासीत्। पूर्वोक्तभवभूतिश्लोकोक्तलक्षणसंपन्नाः पुरुषा भूमौ विरलाः संभवंति । एतेषां सत्पुरुषवराणां नाम्नि यावत्यः पदव्यः संति तावतीनां विचारणे जाते सति जन्मारभ्य मरणपर्यंतं तत्कृतानामवदातानां कर्मणां विवरणं जातप्रायमेवेति कृत्वादौ पदवीविचारस्योपक्रमः कर्तुमुचित इति प्रतिभाति ।

भारतमार्तंडः, वेदांतभट्टाचार्यः, आशुकवीश्वरः, शतावधानी, पंडितचक्रचूडामणिः इति पदव्यो विद्यंते । तत्र प्रथमपदव्याः अर्थस्तु यथा मार्तंडः प्रकाशकत्वसस्योत्पादकत्वारोग्यदातृत्वादिबहुभिर्गुणैः प्रजानां हितकारी भवति तथैवेमे श्रीपंडिताः संति । मार्तंडस्तु बहिर्भूतस्यांधकारनाशको भवति परं पंडितास्तु स्वोपदेशामृतद्वारा शिष्याणां मनसि प्रविश्य तत्रत्य-

मज्ञानं नाशयंति अयं लोकप्रसिद्धमार्तंडापेक्षया विशेषोऽस्तीति ज्ञातव्यम् । किंचैकेन कविनोक्तमस्ति । यत् "गगनतलरत्नं दिनमणिः" "सभारत्नं विद्वान्" तदनुरोधेन हस्तिनापुरे (दिल्ली) पूर्वमेकदा महती सभा समजनि । तत्रत्यमहामहोपाध्यायपदवीधरैः पंडितैस्तु भारतमार्तंड इति पदवी दत्ता विद्यते । तदानीं तु तैरुक्तं यथा गगनतले दिनमणिस्तथाऽस्मद्भारते खंडेऽयं दिनमणिर्नाम मार्तंडस्तस्माद्भारतमार्तंड इत्यन्वर्थपदवी संपादिताऽस्ति । तथैव प्रसिद्धमार्तंडे संतापकत्वमेवास्ति । अत्रभवंतः पंडितास्तु स्ववचनसुधया परेषां संतापशमनकरणे सुधांशुसमानाः संति । तस्मात्परस्परविरुद्धगुणाश्रयत्वं परमात्मवत्तद्भक्तेऽपि भवतीत्युचितमेव ।

वेदांतभट्टाचार्यपदव्याः विचारस्त्वयमस्ति । एकदा श्रीनाथनिवासिनो वल्लभाचार्यवंश्याः टीकैतसंज्ञकाः श्रीगोवर्धनमहाराजास्त्वत्र मुंबापुर्यां समागताः । तदानीं वेदांतशास्त्रे वेदांतचिंतामणिप्रभृतयो बहवो ग्रंथाः पंडितैः रचिताः संतीति ज्ञात्वा तेभ्यो "वेदांतभट्टाचार्यः" इति पदवीं ददुः । तत्तु योग्यमेव । यत एभिः पंडितैः वेदानामंतो नाम निर्णयो यथा वेदवाक्यानां परस्परविरोधपरिहारपूर्वकतया कृतोऽस्ति । तत्र प्रमाणं तु मारुतशक्तिरिति प्राभंजनोपरि टीकारूपो ग्रंथोऽस्ति । तत्र वचनानां युक्तीनां च परिपूर्णतया संग्रहं कृत्वा विरोधपरिहारः कृतोऽस्ति तथान्यत्र कुत्रापि नोपलभ्यते। तस्मादिदं सर्वं समालोक्य महाराजैर्दत्तं वेदांतभट्टाचार्य इति पदवीदानं सयुक्तिकमिति ।

एकदा तु पुण्यपत्तने पंडिताः समागतवंतस्तदानीं त्वसन्मातामहाः श्रीजनार्दनाचार्या आसन् । तैस्तु महती सभा कृता । तत्र तु पंडितैरेवं स्वकीयं शीघ्रकवित्वं प्रदर्शितम् । तदा तत्रत्यपंडितैरेवमुक्तं यदिमे पंडिता न केवलं कवयः संति किंतु आशुकवीश्वराः संतीति । किंचात्रापि बहुवारमस्माभिरेकघटिकामध्ये शतं श्लोका रचिता इत्यनुभूतं विद्यते । किंच शतावधानीति पदवीमध्ये शतेतिसंख्या केवलमुपलक्षणार्था विद्यते । यतः शतापेक्षयाऽधिकावधानकरणमस्माभिः पंडितैः सार्धं श्रीजगन्नाथयात्रायां गमनं कृतमासीत् तदानीं नागपुरे, संबलपुरे, क-

टकनगरे, श्रीजगन्नाथपुर्याम्, कलिकातापुर्यां च पंचशतापेक्षयाप्यधिकावधानकरणं प्रत्यक्षतयाऽनुभूतमस्ति ।

किंच पंडितचक्रचूडामणिरिति पदवी विद्यते तदर्थस्तु पंडा नाम बुद्धिर्येषां संजातेत्यर्थे पंडाशब्दात् "तदस्य संजातं तारकादिभ्य इतच्" इत्यनेन इतच्प्रत्ययं कृत्वा पंडिताः नाम बुद्धिमंतस्तेषां यच्चक्रं नाम समुदायस्तेषां चूडामणिर्नाम शिरोरत्नमर्थात् तैर्यथा चूडामणिर्मस्तकेन धार्यते तथैते पंडिता धारयितुं योग्याः संतीति। "लोभः पापस्य कारणम्" इति वचनं तु पंडितैरक्षरशः पालितमासीत् । लोभवशादेभिः स्वधर्माचरणं कदापि न त्यक्तम् । तथाऽनृतभाषणादिकं नैव कृतमिति सकलजनप्रसिद्धमस्ति ।

एतद्विषये त्वेकाख्यायिका विद्यते । सा यथा इमे पंडिताः महाराजानां दौहित्रा आसन् । अतएव एतेषां संबंधिनां केषांचित् महाराजानां सकाशात् पंचाशत्सहस्रात्मकं वित्तं पंडितानां हस्ते समागतमासीत् । तथापि तत्र लेशमात्रमपि लोभमकृत्वा तत्सर्वमपि वित्तं तेषां महाराजानां योग्याधिकारिणे दत्तमित्यस्माकं विदिततरं विद्यते। एतेषां पंडितानां मध्ये लोकोत्तरा गुणा आसन् तैरेव सर्वत्र यशो विस्तारितम् । तदेवैकेन कविनोक्तम् "गुणाः कुर्वंति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगंधमादाय स्वयं गच्छंति षट्पदाः" इति न्यायेनैतेषां सकाशात् केवलगुणग्रहणार्थमेव बी. ए. पदवीधारिणस्तथा एम्. ए. पदवीधारिणो बहवो विद्वांसः समागतवंत आसन् । तथैव महांतोऽपि प्रधानपदाऽधिकारिणः समागच्छन् ।

पंडितानां तु राजापेक्षयाऽधिकतरत्वं विद्यते। कथमिति चेत् "स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते" इत्यनेन न केवलं भारतवर्षे किंत्वन्यखंडे ( यूरोपादिषु ) एतेषां पंडितानां यशः प्रसृतमासीत् । एतैः पंडितैः स्वपितुः सकाशात् सर्वं ज्ञानं संपादितमासीत् । यतस्तेषां पितृचरणास्तु षट्शास्त्रसंपन्नाः संतोऽपि विशेषेण व्याकरणे प्रवीणा अभवन् ।

एभिः स्वगृह एव "विद्यालक्ष्मी" नाम्न्येका संस्कृतपाठशाला कुखवसुभूमिमिते (१८०१) शाकाब्दे संस्थापिता। यदा पंडितानां पितृचरणा जीवंत

आसन् तदा श्रीभगवत्सेवादिकं सर्वं त एव चक्रुः । अतएव श्रीपंडितानां विशेषसेवादिकस्याभावात् केवलं स्वकीयमाह्निकं यथायोग्यं कृत्वाऽवशिष्टकाले पाठशालामागत्य विद्यार्थिभ्यः पाठादिकं ददति स्म । एते पंडिताः श्रीमद्वेदव्यासविष्णुस्वामिमतपुंडरीकमंडलमंडनमार्तंडश्रीमद्वल्लभाचार्यचरणाब्जचंचरीकचित्ताः मोक्षगुरुस्वमातामहगोस्वामिश्रीव्रजवल्लभचरणैकतानाः तैलंगवेल्लनाटीज्ञातीयतित्तिरिशाखीयापस्तंबबाधूलसगोत्रोद्भवपंचनद्युपनामक धनश्यामभट्टात्मजाः स्वपितृसकाशाल्लब्धविद्याः गोवर्धनशर्माणः संति

परं पितृचरणेषु गोलोकं गतेषु विशेषसेवादिकार्येण स्वकीयाह्निककार्यादिना चावकाशाभावादध्यापनाय यदा कालो नालभ्यत तदा तेषां पंडितानामेव शिष्यः शीघ्रकविशास्त्री श्यामजी वालजीति नामासीत् । स एवाध्यापनस्य कार्यमकरोत् । सोऽपि कवित्वकरणे व्याख्यानदाने च चतुर आसीत् पंडितानां व्याख्यानपद्धतिस्तु तच्छिष्ये समागतेति लोकानां मनसि यथा स्यात्तथैव स शिष्यो व्याख्यानं दत्तवान् । पश्चात्तं शिष्यं स्वसमीपे पंडितत्वरूपेण रक्षितुं श्रीनाथद्वारस्थमहाराजा आहूतवंतः । तदनुरोधेन च स शिष्यः श्रीनाथद्वारं गतः ।

पश्चात्पाठशालायामध्यापनार्थं पुण्याख्यपत्तननिवासिनां श्रीवासुदेवाचार्याणामाह्वानं कृतम् । यतो वासुदेवाचार्यपितॄणां जनार्दनाचार्याणां श्रीपंडितानां च महास्नेह आसीत् । श्रीपंडितानां मुखकमलात् वारंवारमस्माभिः श्रुतमासीत् यज्जनार्दनाचार्याः मम पितृव्यस्थानीयाः संतीति । विद्यालक्ष्मीपाठशालायां श्रीवासुदेवाचार्यैस्तु वर्षद्वयपर्यंतं कार्यं कृतम् । ततस्तेषां शरीरेऽस्वास्थ्यं समजनि । तस्मात्ते पुण्यपत्तने गतवंतः । तदुत्तरमयं श्रीपंडितानां लघुजीवनचरितलेखको वासुदेवाचार्यात्मजो विष्ण्वाचार्यो विद्यालक्ष्मीपाठशालायामध्यापनस्य कार्यं कुर्वाणः सन् अद्यदिनपर्यंतं (त्रयोविंशतिवर्षाणि) कार्यं कुरुते । केनचिद्दंडिना चतुर्षु वैष्णवसंप्रदायेषु तत्खंडनोद्देशेनाष्टौ प्रश्नाः प्रेषिताः । यदेतेषां प्रश्नानामुत्तरं दातुमसमर्थाश्चेद्वैष्णवसंप्रदाया न वैदिकाः किंतु पाखंडा इति । तदुपरि श्रीपंडितैरष्टानां प्रश्नानां मध्ये

प्रतिप्रश्नस्यावांतरानष्टौ प्रश्नान् विधाय खंडनं कृतमस्ति। मिलित्वा चतुःषष्टिः प्रश्नास्तेषामुत्तराणि तत्र संति। सोऽयं सत्सिद्धांतमार्तंडनामको ग्रंथोऽस्ति। तस्य गुर्जरगिरा भाषांतरं कृतं तदेव मुद्रितमस्ति। तथैव श्रीपंडितैर्वेदांतचिंतामणिरिति ग्रंथस्तु निरमायि। यत्र सर्वेषां वैष्णवसंप्रदायानां मतविचारः तेषां प्रक्रिया मायावादिमतस्य विचारः तस्य खंडनं च किंचित्प्रदर्शितम्।

किंच श्रीपंडितैः मारुतशक्त्याख्यैका महती टीका प्राभंजनोपरि कृता विद्यते। प्राभंजनग्रंथस्तु कोटास्थश्रीमहाराजैः सहस्राक्षनामकस्य ग्रंथस्य खंडनार्थं कृतोऽस्ति। सहस्राक्षग्रंथस्तु केनचिन्मायावादिमतावलंबिना दंडिना श्रीवल्लभाचार्यमतखंडनार्थं कृतोऽस्ति। किंच सहस्राक्षस्तस्य खंडनरूपो प्राभंजनस्तस्य महती टीका चेति त्रितयमेकत्र श्रीपंडितैर्मुद्रापयित्वा प्रसिद्धिं नीतमस्ति।

श्रीपंडितानां बुंदीसंस्थानस्य नृपतिना वेत्रं दत्तमासीत् वेत्रधारणकर्तुः पुरुषस्य मासिकवेतनमपि नृपतिनैव दत्तम्। यतोऽलौकिकानां पंडितानामग्रे वेत्रधरः कश्चिद्भवेच्चेत् महती शोभा स्यादित्यभिप्रायेण वेत्रधरो नृपेण दत्तः। तेन दत्तं मानपत्रमधस्ताल्लिखितं विद्यते।

विद्यालक्ष्मीपाठशालायामनध्यायो यदा भवेत् तदांत्याक्षरी कर्तव्येति प्राचीनानां पंडितानां नियमानुरोधेन तत्राप्यंत्याक्षरी प्रचलितासीत्। तथा करणेन समयस्फूर्तिः श्लोकानामवधारणं पाठशक्तिश्चेति त्रितयं वर्धते। अंत्याक्षरीनाम एकेन श्लोकः पठितश्चेत्तस्य यदंत्यमक्षरं भवेत् तदक्षरं यस्य श्लोकस्याद्यमक्षरं भवेत् स श्लोकोऽन्येन पठनीयः पुनस्तस्यांत्यमक्षरं यस्याद्यमक्षरं भवेत्सोऽपरेण पठितव्यः। एवंरीत्या क्रमेण श्लोकान् पठतां छात्राणां यद्यंत्याक्षरोपरि श्लोको न लभ्येत तदा श्रीपंडितैस्तदानीमेव नूतनः श्लोको निरमीयत। तथैव पाठशालायामासने स्थित्वा गीर्वाणभाषयैव वक्तव्यमिति नियमः। तत्र कस्यचित् विद्यार्थिनः स्खलनं भवेच्चेत् तस्य पणतृतीयांशो

दंडत्वेन परिकल्पित आसीत्। एवं गीर्वाणभाषायामत्याग्रहो बभूव । एकदा दयानंदाख्यः कश्चित् पंडितंमन्यः अत्र समागत्य वेदे मूर्तिपूजा नास्तीति वेदानभिज्ञान् स्वकीयकपटवाग्जालेन प्रतारितवान् । तदा श्रीपंडितैः वेद एव मूर्तिपूजा विद्यत इति प्रदर्श्य तस्य पंडितंमन्यस्य खंडनं कृतमासीत् तदा श्रीपंडितानां दिगंतेषु यशोधावल्यं प्रसृतं बभूव ।

एभिः पंडितैर्वल्लभस्तुतिरत्नावलिग्रंथोपरि टीका तथा घटखर्परकाव्योपरि टीका च रचिता विद्यते । तयोर्मुद्रणमपि जातमस्ति । हृदयदूतोपरि भावविवेकनाम्नी टीका तथा निबंधोपरि सत्स्नेहभाजननाम्नी टीका च रचितास्ति । परंतु तयोरपूर्णत्वं विद्यते । श्रीविष्णुसहस्रनामभाष्यं गीताभाष्यमुपनिषद्भाष्यं चेति भाष्यत्रयं विरचितं विद्यते । परंतु तत्समाप्तिं नागमत् किंत्वर्धादधिकभागपर्यंतं लिखितं विद्यते । शुद्धाद्वैतमार्तंडोपरि सुदिननाम्नी टीकापि कृतास्ति । परं साप्यपूर्णा आसीत् । आर्यसमुदयनामकं मासिकपुस्तकं गुर्जरभाषासहितं विरचितमस्ति ।

मुंबापुर्यां प्रेतानां दहनं यंत्रे कर्तव्यमिति राज्ञा नियमः कर्तव्य इति मनस्यानीतम्। तदनुरोधेन धर्मशास्त्रे किंचित् बाधकमस्ति नवेति श्रीपंडितान् प्रति प्रश्नः कृत आसीत्। तदात्वेभिः शास्त्रमर्यादामनुसृत्योत्तरं दत्तं। यद्यंत्रे दहनं कृतं चेत्प्रेतानां संस्काराः न भवेयुस्तेन धर्महानिः स्यादिति। तथा राज्ञो विरुद्धतयोत्तरं दत्तमिति कृत्वा राजसकाशात् महामहोपाध्यायपदवी न लब्धा। तथापि येषां पंडितानां महामहोपाध्याय सि,आय्,ई,इत्यादिराजदत्तपदवीलब्धा विद्यते तैः काश्यादिमुख्यविद्यापीठनगरस्थपंडितैस्तु श्रीपंडितेभ्यः भारतमार्तंडादिपदव्यो दत्ताः संति तेन राज्ञो गुणपरीक्षणं नास्तीति सिद्धम् । अत एवोक्तमस्ति "प्रायेणापात्रभृद् भवति राजा" यतो राजसमीपे जयजयेति कुर्वाणैः महत्यः पदव्यो लभ्यंत इति सुप्रसिद्धतरमस्ति । वेदबाणनंदभूमिते (१९५४) विक्रमाब्दे मार्गशीर्षशुक्लनवम्यां गुरुवासरे भावनगरनामकराजधान्यां श्रीपंडितैरिमं लोकं परित्यज्य स्वकीयपरमप्रियगोलोकगमनं कृतम् ।

श्रीपंडितानां संतानं किमपि नासीत्तथापि तैर्बहुवारमेवमुक्तमासीत् वंशस्तु विद्यया जन्मना चेति द्विविधोऽस्ति । यथा पूर्वं श्रीनागोजीभट्टेन १ परिभाषेंदुशेखरः, २ शब्देंदुशेखरः, इति द्वौ शेखरौ द्वौ पुत्रौ। ३ लघुमंजूषेति एका कन्यकेत्यपत्यत्रयमस्माकं विद्यत इति स्वकीये ग्रंथे लिखितं विद्यते । तथा श्रीपंडितानां १ वेदांतचिंतामणिः २ सत्सिद्धांतमार्तंडः ३ मारुतशक्तिरिति ग्रंथत्रयमेवापत्यत्रयं ज्ञातव्यम् । वेदांतचिंतामणिः सत्सिद्धांतमार्तंड इति द्वौ पुत्रौ मारुतशक्तिरित्येका कन्यकेति । एकस्मिन् कालेऽत्रत्यपंडितैस्तथा सद्गृहस्थैश्च मिलित्वा श्रीपंडितानां मानपत्रं दातुं सभा कृता । सा च महती सभा श्रीलक्ष्मीनारायणमंदिरे ( माधवारामे ) जाता तत्रत्यं सर्वं वृत्तं यथावृत्तमधस्ताल्लिख्यते ।

एभिः पंडितैर्व्याख्यानानि दातुं माधवारामे "आर्यसुधर्मोदयसभा" एतन्नाम्नी सभा संस्थापिता । यत्र मुंबापुरीस्थानां पंडितानां बहिर्देशादागतानां पंडितानां च धर्मसंबंधीनि व्याख्यानानि भवंति । एवंरीत्या दयानंदागमनमारभ्येयं सभा प्रचलिता आसीत् सा त्वद्यापि तथैव चलितास्ति । एतेषां स्मारकत्वेनाधुना विद्यमानास्तिस्रः संस्थाः संति । एका त्वेतेषां लाड्डुबेटीनाम्न्या मातुर्भगवन्मदिरं। द्वितीया त्वेतैरेव संस्थापिता विद्यालक्ष्मीपाठशाला । तृतीया तु एतैरेव महाद्रव्यव्ययेन संपादितानां एतेषां पितृसंगृहीतानां पुस्तकानां च संग्रहात्मिका संस्था ( धर्मपुस्तकालयः ) सतीति ॥

## मुंबईस्थमानपत्रम् ।

श्रीमान्परमेश्वरः कृपालुर्वागादींद्रियाद्यगोचरोपि प्रारब्धकर्मफलदानेन प्राणिनामनुग्रहाय जगद्रूपेणाविर्भूय सर्वानर्थनिवारणहेतून् स्वनिःश्वासभूतान्वेदान् प्रथमं हिरण्यगर्भं प्रत्युपदिदेश ॥ ततो मंदमत्यनुजिघृक्षया स्वोपदिष्टवेदार्थमेवोपबृंहयितुं स्वयमेव मनुव्यासजैमिनिप्रभृतिमुनिरूपेणाविर्भूय धर्मप्रकाशनहेतून् स्मृतिपुराणादीन् रचयामास ॥ एवमपि कलिमालिन्यवशाज्ज्ञानदुर्बलाञ्जनानालोच्य स्मृत्याद्यपबृंहितवेदार्थतत्त्वमेव स्फुटीकर्तुं तत्तदाचार्यरूपेणावतीर्य जनानन्वग्रहीत् ॥ ततोप्यतिघोरकलिकालवशात्तत्तदुक्तिष्वपि नानाविधकुतर्कवशेनाविश्वासतामसद्यापारविपरीतमतीनां जनानां म-

नसि याथार्थ्येन तत्तात्पर्यं प्रकाशयितुमार्यसुधर्मोदयसभायां पक्षेपक्षे धर्मतत्त्वोपदेशेन बुभुत्सूनां मतिमालिन्यं निराकर्तुं किरणाधूतपापाचेत्याद्युक्तपञ्चनदिवज्जनचित्तानां शोधकत्वेन धर्मतत्त्वोत्तेजकसंस्कृतगवीनां वर्धकत्वेनचान्वर्थितनामोपनामानः **पञ्चनदिगोवर्धनशर्माणः** सभासदस्तन्मनोनुरञ्जनेनानुगृह्णंति ॥ ये च स्वस्वधर्मं बुभुत्सुभिः स्वानर्थनिवृत्तये सुरैर्हरिरिव प्रतिदिनमभ्यर्थ्यन्ते यांश्च वाग्देवता स्वयमेवागत्य ब्रह्माणमिवावलम्बते ॥ यैश्च विद्यासवितुः स्वसवितुर्मुखादधिगतसकलविद्यैः **श्रीयुक्तलाडूबेटीघनश्यामभट्टाभिधानौ** स्वमातापितरौ कृतबहुतपसौ वासुदेवेन देवकीवसुदेवाविव परं समतोष्येताम् ॥ येभ्यश्च धर्मं बुभुत्सवो जनाः परमेश्वरार्पणबुद्ध्यैव वसूनि यथाशक्ति प्रयच्छन्ति ॥ येभ्यो निर्गता वाचः सर्वात्मना सुजनानानन्दयन्ति ॥ येषां च सकलशास्त्रहृदयज्ञातृत्वमखिलबुधैरभिनन्द्यते ॥ येषु च विलक्षणंवदत्वं वदान्यत्वमखिलजनमनोहारिशीघ्रकविताशक्तिः सौजन्यं सदाचारसंपत्तिश्च विराजन्ते ॥ तादृशेभ्यो भवद्भ्य एतदखिलं वृत्तमनुभूयामितं मोदमादधानाः सर्वे वयमविरतसहवाससुखविच्छित्तिपरिहाराशया यथाशक्ति द्रव्यविश्राणनद्वारा साहाय्यं कुर्वाणा अद्य यत्किंचिदुपचितं वित्तं वितीर्य बहुसत्कारसूचकमिदं मानपत्रं समर्पयामः ॥ एतच्च भवद्गुणवर्णनाऽपर्याप्तमपि केवलमस्मास्वनुकम्पयाङ्गीकुर्वन्त्वत्रभवन्तो भवन्त इति विज्ञप्तयः समुल्लसन्तुतराम् ॥

मुंबापुर्यां माधवारामे ( माधवबागमध्ये ) काकाशवसुवसुधामिते १८०१ शकाब्दे चैत्रबहुलचतुर्दश्यां रविवासरान्वितायामर्पितमिदम्.

**वरजीवनदास माधवदास.**

अध्यक्ष.

**वन्दरावनदास पुरुषोत्तमदास.**
**त्रिभुवनदास वरजीवनदास.**
**चतुर्भुज मुरारजी.**
**गोकुलदास जगमोहनदास.**

ऑनररी सेक्रेटरी

# कलिकातास्थं मानपत्रम्

श्रीमन्तः सकलजनप्रशंसितसौजन्यवदान्यादिगुणरत्नरत्नाकरा अनेकदेशवास्तव्यजनजेगीयमानयशःस्तोमनिकराः श्रीमद्वल्लभाचार्यप्रवर्तिताचारविचारचातुरीधुरीणार्यजनहृत्पुण्डरीकप्रभाकरा वेदान्तभट्टाचार्याशुकवीश्वरेत्याद्यनेकोपनामालङ्कृताः पाण्डित्यगुणगणगुम्फिताः स्वाधिष्ठानातिशयितमुम्बानगरीशोभाविशेषा भवन्तः **पंचनदिश्रीगट्टूलालमहोदयाः** समुपेत्यात्र श्रीजगन्नाथतीर्थयात्राप्रसंगेनात्रत्याञ्शिष्टान् विदुषश्च स्वात्मनः शतावधानितां यथार्थयन्तोऽसाधारणस्मृतिशक्तिपरिचायकेनापरिचितास्वनेकभाषासु विविधावधानप्रदर्शनेन समीक्षकजनाभिलषितविषयानुसारिसमस्यापूर्तिपाण्डित्येन पञ्चदशपलाभ्यन्तरएव पंचविंशतिश्लोकनिर्माणनैपुण्येन सांगवेददर्शनधर्मशास्त्र-व्याकरणादिविविधविद्याविवेकशक्तिसंयुक्तत्वेन विविधालंकारालङ्कृतकाव्यप्रणयनेन विनयादिगुणगणगरिम्णा च भृशं संतोषयन्ति स्मेति । विशेषतश्चाबाल्यान्धानां भवतामेष उत्कर्षप्रकर्षोऽतीवास्माकं विस्मयावहः कौतुकावहश्चेत्येतदभिज्ञानभूतमभिनन्दनपत्रमदः श्रीमद्भ्यः सबहुमानं समर्प्यतेऽस्माभिरिति शम् ॥=॥

सौराश्विनस्य चतुर्विंशतितमे दिने ॥ संवत्—१९४७ । कलिकाताराजधान्याम् ।

महामहोपाध्यायविद्यारत्नोपाधिकेन श्रीभुवनमोहनशर्मणा—
महामहोपाध्यायन्यायरत्नोपाधिक श्रीराखालदासदेवशर्मणा—
तर्कवागीशोपाधिक श्रीकामाख्यानाथशर्मणा—
स्मृतिरत्नोपाधिकेन श्रीमधुसूदनशर्मणा—
श्रीउपेन्द्रमोहनशर्मगोस्वामिना—
महामहोपाध्याय श्रीदीनबंधुदेवशर्मणा—
महामहोपाध्यायन्यायरत्नोपनामकेन श्रीमहेशचन्द्रशर्मणा—सी, आय्,ई.
श्रीगोविंदशास्त्रिणा—

श्रीचन्द्रकान्तशर्मणा—

श्रीसदानन्दमिश्रेण—

श्रीरामेन्द्रन्यायवागीश भट्ट पल्लिनिवासी—

महाराजा बाहादुर ठाकुरोपाधिकसार श्रीयतीन्द्रमोहनशर्मणा—के, सि, एस्, आई.

राजा श्रीप्यारीमोहनमुखोपाध्याय—सि, एस्, आई.

राजा सार श्रीसौरीन्द्रमोहनठाकुर—सि, आई, इ, इत्यादि—

मुखोपाध्यायोपाधिक श्रीशिवनारायणशर्मा—

श्रीविधुभूषणमुखोपाध्याय श्रीरासविहारीशर्मा—

श्रीमधुसूदनशर्मा स्मृतिरत्नोपाधिक भट्ट पल्लिनिवासी

श्रीहृषीकेशशास्त्री—

विद्यारत्नोपाधिक श्रीमहेन्द्रनाथशर्मगोस्वामिना—

न्यायरत्नोपाधिक श्रीराजकुमारशर्माणः—

बाबु श्रीदामोदरदासवर्मा—

राजा श्रीराजेन्द्रनारायण देवबहादुर—

राजा श्रीराजेन्द्रलालमित्र—सि, आई, ई, एन्ड एल्, एन्, डी.

बाबु श्रीगिरीन्द्रचन्द्रघोषस्य—

बाबु श्रीगिरीश्चन्द्रदास रायबहादुर—

बाबु श्रीरमानाथघोषस्य—

बाबु श्रीनंदलालवसु—

## बुन्दीश्वरदत्तमानपत्रम् ।

॥ श्रीहरिः ॥

॥ श्रीमन्महाराजाधिराजमहारावराजेत्यादिपदवीशोभमानैर्बुन्दीश्वर-श्री १०८ श्रीरघुवीरसिंहवर्मभिर्वितीर्णमभिनन्दनपत्रम् ॥




॥ अयि पञ्चनदीत्युपनामकाः समाजद्वयलब्धभारतमार्तण्डवेदान्तभट्टाचार्येतिविशेषणद्वयाः श्रीगोवर्धनशर्माणो गट्टूलालेतिप्रसिद्धनाम्ना व्यवह्रियमाणाः कार्यप्रसङ्गेनैतद्देशसौभाग्यमाविष्कुर्वतां भवतां यशःपुण्डरीकं बुन्दीजनताकर्णावतंसतामयासीत् । अथ तदाकर्णितवद्भिरस्मत्सभ्यैर्वयमपि शतावधानादिकौशलसाक्षात्कारोत्सुकचेतसोऽकारिष्महि । तदनु च कोटातः स्वदेशोद्देश्यकप्रस्थानानेहसि बुन्दीमासेदिवद्भिर्भवद्भिरस्मदास्थानीमुपेत्य श्रुतचरादप्यधिकं कौशलमन्वभाव्यत । तत्र च सर्वेन्द्रियाणि श्रवणैकरूपतां निनीषत्सु सभ्येषु संस्कृताद्यनेकभाषाविषयकशताधिकावधाने, प्रच्छकजनोदीरितान्योन्यासम्बद्धार्थकपादत्रयस्य तदभिलषितवर्ण्यविषयैकपादेन झटिति स-

मस्यापूरणे, त्वरितं श्लिष्टकाव्यनिर्माणे घटीतुर्यांशकाल एव पञ्चविंशतिश्लोकग्रन्थने, तत्कालनिर्दिष्टयोर्मेघनादकंसवधाख्यानयोः श्लेषेण सत्वरं निर्माणे, षड्दर्शिनीतत्त्वप्रदर्शनादौ चानल्पां वैज्ञानिकतां प्रदर्श्य विनयभूम्ना च सा परां कोटिमनायि। ततश्चाऽऽबाल्यादपरिकलितबाह्यदेशामप्येतादृशीमन्तर्द्देशमवगत्यातिविस्मयमोदमेदुरमनसो वयमेतदभिनन्दनपत्रं गौरवाभिज्ञानभूतां रजतयष्टिं चार्पयामः ॥ ऊर्जासितसप्तम्यां भौमे संवत् १९५०.

## ॥ हिन्दीभाषा ॥

श्रीयुत पञ्चनदी गोवर्द्धनजी महाशय, इसदेशके सौभाग्यसे आपका किसी कार्यवश इधर आगमन हुआ, तब आपकी कीर्ति बुन्दीनगरनिवासियोंके कर्णगोचर हुई, और हमभी हमारे सभ्योंके मुखसे आपकी प्रशंसा सुनकर आपके शतावधानादि विलक्षण चमत्कारोंके प्रत्यक्ष देखनेके लिये उत्कण्ठित हुए। तदनन्तर जब आपने कोटानगरसे अपने देशको जाते हुए इस नगरको सुशोभित किया, और हमारी सभामें आगमन किया, तब जैसा आपका बुद्धिकौशल पहले सुना गया था उससे अधिक चमत्कार देखा गया। यहां सभामें जब कि समस्त सभासद अनन्यचित्त होकर आपकी वाणीके सुननेमेंही लगे हुएथे। आपने संस्कृत प्राकृत हिन्दी अरबी आदि कई भाषाओंके विषयमें सौ १०० सेभी अधिक अवधान करना, पूछे हुए परस्पर अनमिल तीनचरणोंकी पूछनेवालेकी इच्छानुसार वर्णनमें एकचरणसे बहुत शीघ्र समस्यापूर्ति करना, १५ पलमें पच्चीस २५ नवीन श्लोक बनाना, स्वल्पसमयमें दो अर्थवाले ५ श्लोकोंकी रचना करना, तत्कालमें पूछी हुई मेघनाद और कंसके बधकी कथाओंका श्लेष करके रचना करना, छहों दर्शनशास्त्रोंके मतोंको स्पष्ट रूपसे दिखलाना इत्यादि विषयोंमें अधिक कौशल प्रकट किया, और इतनी विद्वत्ता होनेपरभी आपकी लोकोत्तर नम्रता देख कर हमको अधिक प्रसन्नता हुई, इसलिये हम प्रसन्नतापूर्वक आपको यह अभिनन्दनपत्र और चांदीकी छडी देतेहैं। कार्तिक कृष्ण सप्तमी भौमवार संवत् १९५०.

## नसीराबाद सनातनधर्मसभा मानपत्रः

विदित हो कि, इस नगरके निवासियोंकी अत्यंत अभिलाषा तथा भक्ति देखकर यहांकी सनातनधर्मसभाने श्रीमान् महाराजाधिराज श्रीमान् भारतमार्तण्ड पण्डितवर श्रीयुत १०८ श्रीगट्टूलालजी महाराजको निमन्त्रणपत्र भेजा था, और एक सभ्यजनको श्रीमान्की सेवामें प्रेरित किया तो श्रीमान्ने उक्तनिमन्त्रणको ग्रहण किया, और ता. २८ मई सन् १८९५ की संध्याकी रेलमें पधारके इस अपवित्रभूमिको पवित्र किया। स्टेशनपर नगरवासी अनुमान् एकसौ बडे २ रईस श्रीमान्के स्वागतको गये थे। वहांसे चौपैया बग्गीमें श्रीमान्को बिराजमान् करके शहरमें लाये और उसी दिवस संध्याको श्रीबिहारीजीके मन्दिरमें जो बहुत बडा है सभा हुई. श्रोतागणोंसे मन्दिर पूरित होगया था, श्रीमान्ने धर्म विषयपर वो अपूर्व व्याख्यान दिया कि जैसा आजतक हमलोगोंने कभी नहीं सुना था। दूसरे दिन सरकारी बागमें सभा हुई जिससें बडे२ अंग्रेज महाशय यथा जनरल, कर्नल, केप्टन, और लेफ्टिनेन्ट साहिब बहादुर और मौलवी मुसलमान् और नगरके सैंकडों धर्मावलम्बी और अजमेरके बडे २ नामधारी आर्य्यसमाजी पधारे थे। प्रथम जर्मन, फ्रांस, अंगरेजी, संस्कृत, नागरी, मरहटी आदि अनेक भाषाओंमें अवधान हुआ, जिसको सुनकर लोग अचंभेमें आगये। अंग्रेज महाशय तालीबजाते २ और वाह २ कहते थकगये और नगरवासियोंके आनन्दका तो पारावार नहीं था। श्रीमान्की स्मरणशक्तिकी प्रशंसा जहांतक की जाय थोडी है। जनरलसाहिब तथा मेजिस्ट्रेट साहिबोंने बडे उत्तम२ प्रशंसापत्र श्रीमान्जीको निवेदन किये हैं। तत्पश्चात् मूर्तिमंडन, श्राद्धतर्पण, तथा तीर्थस्नानपर अति आश्चर्ययुक्त व्याख्यान दिये। व्याख्यान क्याथे मानों हमलोगोंके हृदयमें अमृतरूपी वरषा करतेथे। व्याख्यानूके पश्चात् श्रीमान्ने फर्माया कि, यदि किसीको कुछ शंका होवे तो प्रश्न करे, परन्तु किसीने भी कुच्छ नहीं पूछा। तत्पश्चात् सभा विसर्जन हुई। हम

सहृदय निवेदन करते हैं कि, हमने आजतक ऐसा न तो अपूर्व व्याख्यान सुना था और न ऐसी स्मरणशक्ति किसीमें देखी थी। आप इससमय इस कलिकालमें धर्मके बडे रक्षक हैं। आपका आह्निककर्म देखकर हम चकित हो रहेहैं। आपकी स्मरणशक्ति और व्याख्यान देनेकी शक्ति अपूर्व है। अब इस पत्रको पूर्ण करके श्रीमान्से निवेदन करते हैं कि। यहांकी सनातन धर्मसभापर पूर्ण कृपादृष्टि बनी रहैं ॥ शुभम् ॥

मिती आषाढ कृष्ण दशमी सम्वत् १९५२ ता. २७ जून सन् १८९५ चंद्रवार सनातन धर्मसभा नसीरावाद ( राजपूताना ). } भवानीप्रसाद प्रधानमंत्री छागालालमंत्री

## शाहपुरस्थ मानपत्रम्.

॥ श्रीरामजी ॥

॥ श्रीमान् भारतमार्तंडधर्म्मप्रभाकरवेदान्तभट्टाचार्य्यआशुकवीश्वरभटजीमहाराजश्री ५ श्रीपंचनदीगट्टूलालाजीमहाराजकी सेवामें

हम सर्व सनातनधर्मावलम्बी शाहपुरानिवासी अत्यंतहर्ष और विनयपूर्वक आप श्रीमान्का धन्यवाद करतेहैं और अपने मनका वृत्तान्त प्रगट करते हैं कि। आप श्रीमान्के यहां पेधारनेसे और हम सबको धर्मोपदेश करनेसे जो आनंद और उपकार धर्म्मके विषयमें आप श्रीमान्से हमको हुवा है उसके लिये जितना धन्यवाद और प्रशंसा आप श्रीमान्की हम करें बहुत थोडी है। विशेषकरके हम इसके लिये आप श्रीमान्का जियादहतर धन्यवाद करतेहैं कि हमारे लिये आप श्रीमान्ने परिश्रम उठाकर यहां पधारके हम सबकी इस कलियुगमें अन्यधर्मोंसे ग्रसित हुओंकी रक्षा की और जो संशय नवीन प्रचलित धर्मोंसे हमलोगोंके मनमें अल्प कालसे प्राप्त होनेलगेथे सर्व आप श्रीमान्ने मिटाये। मानो हमारे धर्म्मरूपी

जहाज डूबते हुयेको आप श्रीमान्‌ने उभारा। जिसके पटलेमें सर्वशक्तिमान् सर्वज्ञ सर्वव्यापी घटघट अंतर्यामी श्रीगोवर्धनधारीसे आपश्रीमान्‌के लिये हम सब सच्चीभक्ति और प्रेमके साथ प्रार्थना करते हैं कि आप श्रीमान् महात्माको चिरकालतक इस संसारमें विद्यमान रखकर सब प्रकार धर्म्मके विषयमें आप श्रीमान्‌को दिग्विजय करे कि जिससे सनातनधर्म्मकी प्रतिदिन उन्नति होवै। शुभ मिति पौष कृष्णा ३ सं १९४९.

भोलानाथदीवानाश्यास्त साहपुरा
लालाबीहारीलाल
स्हाफुलचंदचोरज
द. पं. श्रीकृष्ण
द० मांगीलालतोस्णीवाल
द० परवावहजरीसा
द. जगानाथव्यासका
हस्ताक्षरफोजमलवीराणी
दा. छोटेलालपंचोली
दा. रमनाथचेचाणीका
दा. मगनीरामतोसणीवालक.
द. रामवीलाससारडाका
द. रामचंदरेगीया
द. जीवणरामबेटडाका
दसकतसोबगसलुफादार
द. घुलीरामप्रगदपाचका
दा. रुगनाथकोठारी
द. व्यासमाधालाल
द. सिंहवीकिसनसिंह
द. घुलमलनाहार
द. बदरीलालमुदडा
द. व्यासददमतका
द. भोमसिंगका
द. व्यासफलतेलाल
द. ह्मताअमरसीघ
द. हजरीमन्नवीप्रजी
द. स्हाजगननाथतोरणीवाल
हस्ताक्षरकृष्णलालकायस्थवाल
द. स्हाएकलीगदासतोरणीवाल
द. बकः बरजरागीरस्हानवाल
द. रामरतनाधनगरप्रव
द. हरालजीपनालालजी
द. श्योदानसिंहबुलजी

## श्रीगट्टूजीमहाराजानां वंशवृक्षः।

एतेषां श्रीमतां पंडितानां वंशपादपस्त्वेवं विद्यते। तत्रत्याःपुरुषास्तु महाविद्वांसःतथा यज्ञकरणेन महाश्रोत्रियाश्चाभवन्। तत्रत्यमूलपुरुषस्तु श्रीगोविंदशर्मासीत्। तस्य पुत्रस्त्वाल्हादभट्टशर्मा बभूव। सच देवकाबेट-

जीनाम्नीं कन्यकां परिणिनाय । साच देवकाबेटजी श्रीविठ्ठलनाथजीमहाराजस्य चतुर्थी कन्यासीत्। श्रीविठ्ठलनाथजीमहाराजस्तु श्रीमतो वन्ह्यवतारस्य वल्लभाचार्यस्य पुत्र आसीत्। आल्हादभट्टस्य पुत्रः कृष्णरायजीशर्मा । कृष्णरायजीशर्मणः पुत्रो नरसिंहजीशर्मा । तस्य पुत्रो माधवजीशर्मा । तस्य पुत्रो मधुसूदनजीशर्मा। तेन मधुसूदनजीशर्मणा तंजावरेश्वरेण नृपतिना पौरोहित्यायामंत्रणं दत्तम् तत्साहाय्येन ततः यज्ञादिकं च राजसकाशात् कारितम्। तस्य मधुसूदनजीशर्मणः पुत्रो मदनगोपालजीशर्मा बभूव। तस्य पुत्रोऽनिरुद्धजीशर्मा। तस्य द्वौ पुत्रौ एको रघुनाथः अन्यो व्रजनाथः। तन्मध्ये व्रजनाथस्य पुत्रो मुरलीभट्टजीशर्मा । तस्य पुत्रो गोपीनाथजीशर्मा । तस्य पुत्रो घनश्यामजीशर्मा । तस्य पुत्रः श्रीगोवर्धनशर्मा ( प्रसिद्धनामपंडितगट्टूलालेति ) बभूव । तेषां पंडितानां वृद्धप्रपितामहस्य बंधुस्तु रघुनाथशर्मासीत् । तस्य पुत्रः पुरुषोत्तमजीशर्मा । तस्य द्वौ पुत्रौ बालमुकुंदः दामोदरजीशर्मा चेति । बालमुकुंदस्य पुत्रो रघुनाथभट्टजीशर्मा । तस्य पुत्रो द्वारकानाथशर्मा। तस्य पुत्रो दामोदरलालशर्मा । तस्य पुत्रो मन्वालालशर्मा । ते तु मन्वाललशर्माणोऽधुना विद्यमानाः संति । तैरेव श्रीपंडितानामौर्ध्वदेहिकं सर्वं कार्यं कृतमस्ति । पंचनदीत्यस्याधुना ( तीरुपादि ) इतिप्रसिद्धं नाम विद्यते । तच्च तंजावरनगरसमीपे पंचक्रोशपरिमिते स्थाने विद्यते । तत्र कावेरीमहानद्याः पंचावृत्तयः संजाताः संति । अतएव पंचनदीत्युपाह्वता जाता । यज्ञादिषु कृतेषु प्रसन्नेन राज्ञा द्रव्यं दातुमारब्धम् । तथापि तेन पुरोहितेन मया राजप्रतिग्रहो न क्रियते तस्मान्मयाप्येको यज्ञः कर्तव्योऽस्ति । स तु यज्ञो द्रव्यं विना न स्यात्तदर्थं द्रव्यं दातव्यमित्युक्तम् । पश्चाद्यज्ञसमये लक्षत्रयपरिमितं द्रव्यं राज्ञा दत्तम् । तद्रक्षणार्थं मया भवता सह किंचित्सैन्यं दीयत इति राज्ञोक्ते सति तेन पुरोहितेन रक्षणार्थं सैन्यं मास्त्वित्युक्तम् । पश्चादयं पुरोहितः कथं रक्षणं कुर्यादिति परीक्षार्थं राज्ञा स्तेयकरणार्थं स्वयं सेवकाः प्रेषिताः । तथापि पुरोहितेन स्वमंत्रसामर्थ्येन सैन्यानां मध्ये

केषांचिच्छरीरेषु षट्षट् प्रहाराः कृताः इति ज्ञात्वा शेषाः सैनिकाः पलाय्य राज्ञः समीपे समाजग्मुः । पश्चाद्राजा स्वयं गत्वा ममापराधः क्षम्यतामित्युक्त्वा पुनरपि लक्षत्रयं दत्तवान् । ततः स पुरोहितः तद्द्रव्यं गृहीत्वा मथुरानिकटे परमपवित्रे स्थाने ( कामवनाख्ये ) गत्वा तत्र यथाविधि यज्ञं चकार । तत्र यज्ञे तस्य सर्वस्य वित्तस्य वितरणं कृतम् । तत्र लोभो न कृतस्तेन तस्य वंशे नररत्नान्युत्पद्यंत इत्यलम् । एतेषां वंशस्य पंचनदीत्युपाह्वता विद्यते । तत्र प्रमाणं तु श्रीमद्भागवते एकादशस्कंधे पंचमाध्याये श्लोकाः संति ते यथा—

कृतादिषु प्रजा राजन् कलाविच्छंति संभवम् ।
कलौ खलु भविष्यंति नारायणपरायणाः ॥
क्वचित् क्वचिन्महाराज द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ।
कावेरी च महापुण्या प्रतीची च महानदी ॥

श्रीपंडितानां वंशस्य पंचनदीत्युपाव्हता बभूव । सा च पंचानां नदीनां यत्र समागमः आसीत्तत्रत्यदेशे निवासकरणेनैवासीत् ।

## पंडितगट्टूलालाजीनां मूलपुरुषाणामितिहासः ।

पंचनदक्षेत्रस्य यो राजासीत् तस्य पुरोहितो दानाध्यक्षश्च पंचनदीरामैय्याशर्मा बभूव । तस्य पुत्रोऽल्लडभट्टशर्माऽभवत् । सतु वेदे शास्त्रे चोभयत्रातीव प्रवीण आसीत् । तस्यात्यंतं विद्याचातुर्यं पर्यालोच्य श्रीगोस्वामिमहाराजास्तान् प्रत्यात्मना सहानेतुमाग्रहमकुर्वन् । तदा ते राजकीयं पौरोहित्यं दानाध्यक्षत्वं च स्वपितृव्याय समर्प्य स्वयं श्रीगोपाललालजी स्वस्य कुलदैवतं तथा स्वमातरं च सह गृहीत्वा गोस्वामिमहाराजैः सहात्रागमन् । ततस्तेषां बुद्धिकौशल्यं भक्तिं च समालोच्य श्रीमहाराजाः स्वकीयां कनीयसीं कन्यां तेभ्यो ददुः । तस्या देवकाबेटीनाम्न्याः जन्म सप्तभूमिरसचंद्रमिते १६१७ विक्रमाब्दे वैशाखवदि एकादश्यामासीत् । सविवाहस्तु वह्निद्विरसभूमिते १६२३ विक्रमाब्दे संजातः । पश्चात् खाग्निरसविधुमिते १६३० विक्रमाब्दे कार्तिकवदि चतुर्थ्यां चंद्रवासरे तेषां पुत्रो नारायणभट्टशर्मा बभूव । ततो नेत्राग्निशास्त्रभूमिते १६३२ श्रावणशुदि तृतीयायां द्वितीयः पुत्रः

कृष्णंभट्टशर्माऽभवत् । ततो बाणवह्निरसभूमिते १६३५ विक्रमाब्दे माघवदि षष्ठ्यां तृतीयः पुत्रोऽनिरुद्धभट्टशर्मा बभूव । अनंतरं वसुग्निरस भूमिते १६३८ विक्रमाब्दे माघशुदि पंचम्यां जगन्नाथभट्टशर्मा पुत्रो बभूव ॥ पंडितास्तु सोमयागं किसनगढस्य महाराजेन नृपेणाऽकारयन् । यतः स राजा वैष्णव आसीत् । अत एव वैष्णवसंप्रदायस्य वेत्तारः पंडिता एव विद्यंते नान्ये संतीति विचार्य तान् प्रत्याहूय यज्ञं कृतवान् । तदानीं श्रीनाथनिवासि टीकेतसंज्ञकाः श्रीगोवर्धनमहाराजा अपि यज्ञे गतवंत आसन् । यतस्ते वैष्णवानां मुख्याचार्याः संतीति कृत्वा नृपेण तेषामाह्वानं कृतमासीत् । अस्मिन्सोमयागे तु प्रत्यक्षपशूनां हिंसा जाता । तदानीं वैष्णवैस्तथान्यैर्महाराजैरेवमेवचाहिंसापरमो धर्म इत्यक्षरशः पालयद्भिर्जैनैश्च पशुहिंसा न विधेयेति हेतुना महाप्रयत्नः कृत आसीत् । परंतु सकामयज्ञे नृपस्य चित्तमासक्तं बभूव । स तु यज्ञः पुत्रकामेन नृपेण समारब्धोऽभवत् । यथापूर्वं सार्वभौमदशरथनृपतिना पुत्रकामेन सता यज्ञः कृतो बभूव । तदनुसारेण च तस्य श्रीरामादयश्चत्वारः पुत्राः संजाताः । तथानेन श्रीयुवानसिंहेन नृपतिना सोमयज्ञः कृतः । पश्चात्तन्मनोरथपूरणमपि प्रसन्नेन श्रीयज्ञनारायणेन कृतम् । अतएव पूर्वोक्तेन श्रीयुवानसिंहेन स्वपुत्रस्य यज्ञनारायण इति नाम कृतम् । अस्मिन् यज्ञकरणे प्राधान्यं श्रीपंडितानामासीत् । तान् प्रति बहुभिर्लोकैस्त्रास उदपादि । तथापि पंडितानां धर्मे त्वेक एव निश्चयोऽभवत् । तेचावदन् यदि नृपो हिंसां न कुर्यात् तथा क्रियताम्वयं तु कारयितारः स्मः । अस्माभिस्तु याजनं क्रियते । यतः श्रीगीतायामुक्तमस्ति " तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि " इति श्रीभगवदाज्ञा विद्यते । शास्त्रं चैवमस्ति "हिंसा त्ववैदिकी यातु तयानर्थो ध्रुवं भवेत् । वेदोक्तया हिंसया तु नैवानर्थः कथंचन" । किंच साक्षाद्वेदः "अग्नीषोमीयं पशुमालभेत" इत्येवं प्रतिपादयति । वैदिकसंस्कारेण कृता हिंसा तु हिंसा नैव भवति । अर्थात् तया हिंसया पापं न संभवति । किंच सकामकर्मणि सांगे जाते सति तदनुरूपं फलं भवतीति नियमोऽस्ति । यद्यपि सकामकर्मणः परिणामो निष्कामकर्मवत् सुखदायको न भवति तथाप्यधिकारिभेदेन सकामनिष्कामकर्मणां व्यव-

स्था वर्तते । अत एव यस्याल्पसुखेच्छा भवेत् तेन तदर्थं तत्प्रापकं कर्मानुष्ठानं कर्तव्यं । तत्र शास्त्रस्याज्ञा विद्यते । एवंरीत्या पुरातना बहवो राजानो यज्ञादिकं कृत्वा स्वमनोरथं संपादयामासुः । तस्माज्जैनानामन्येषां कतीनां वैष्णवानां चाग्रहे किमपि चित्तमदत्वा केवलशास्त्रावलंबनमेव श्रेयस्कारकमिति पंडितानां दृढनिश्चय आसीत् । एवंरीत्या धर्माग्रहे तेषां द्रव्यहानिर्बहुवारं जातासीत् । तथापि अर्थकामाभ्यां श्रेष्ठः धर्म इति शास्त्रवचनमेव तैः स्वीकृतम् । यतः "धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इति शास्त्राज्ञैव मुख्या । तदग्रे त्वैहिकसुखसाधनं द्रव्यं तुच्छतरमिति ते मन्यंतेस्मेति शम् ।

रजपुतानास्थ "भणाय" नामकसंस्थानाधिपतिना नृपालेन त्वेतेषां सदाचरणशीलतापद्यपि सत्यवादिताद्यनेकसज्जनगुणान् पर्यालोच्य पुरातनवसिष्ठादिमहर्षिसमानगुणतां च परीक्ष्य स्वकीयेल्पेऽपि राज्ये प्रधानादिमंडलमध्ये "महर्षिरिति" पदवी दत्ता । किंच स्वकीये संस्थाने पंडितानां हस्तेन "आर्यसुधर्मोदयसभा" एतन्नाम्नी सभा संस्थापिता । स्वस्य कोशस्याल्पत्वेऽपि तत्सकाशात् प्रतिवर्षं शतमुद्रिकावितरणं श्रीपंडितानां साहाय्यार्थं जीवितावधि प्रेषितमासीत् । इयमेव नाम गुणपरीक्षा। अन्यथा कोटीशैरप्यन्यैर्नृपैः किमप्येतादृशं वर्षासनं नैव प्रत्तमासीत् । मुंबापुरीस्थक्षत्रियकुलोत्तंसेन श्रेष्ठिचतुर्भुजमुरारजीसंज्ञकेन श्रीमद्भगवद्गीतोक्तेन "दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्" स्वस्यक्षत्रियत्वज्ञापकौदार्येण प्रतिमासं श्रीपंडितेभ्यः शतमुद्रिकादानं कृतमासीत् । परंतु तत्रायं नियमः। यत्पंडितैर्यावत्पर्यंतं मुंबापुर्यां वासः क्रियते । अर्थात् परदेशगमने तस्य मासिकशतस्य प्रतिबंधः । अनेनत्वेवं सिद्धम् । यदन्ये बहवो धनिकाः संति । तथापि तन्मध्ये केनाप्येवं रीत्यागुणपरीक्षणं कृत्वा पंडितानां साहाय्यंनैवाकारि । श्रीमतां पंडितानां गोलोकवासस्तु श्रीभावनगरे जातस्तच्छ्रुत्वाऽत्रत्यवणिक्कुलभूषणेन श्रेष्ठिना देवकर्णेनानजीसंज्ञकेन तत्कालमेव विद्युद्यंत्रद्वारा श्रीपंडितानां सहधर्मचारिण्यै विज्ञापितम् । यत्प्रतिमासं पंचाशन्मुद्रिकात्मकं मासिकं यावज्जीवमहं ददामीति । पश्चात् पंडितविरहासहिष्णुतया तत्सहधर्मचारिण्याऽपि गोलोकवासस्तु द्वित्रैर्दिनैः कृतः । ततः पंडितानामेकं कन्यापत्यमवशिष्टमासीत् ।

तदानीं भावनगरनृपतिना भावसिंहनामकेन कन्याया विवाहावधि प्रतिमासं पंचविंशतिमुद्रात्मकं मासिकं दत्तमासीत् । ततस्तत्कन्यापत्यमपि कतिपयैर्मासैर्गोलोकवासि बभूव । पश्चात्पूर्वोक्तनृपतिभिर्गृहस्थैश्च स्वकीयं प्रतिज्ञातं मासिकं नैव दत्तमिति तु न्याय्यमेवास्ति । तथाप्येतेषां मातृचरणानां श्रीभगवत्सेवार्थं श्रीभगवन्मंदिरं विद्यते । तत्तु मातृरूपमस्ति । एतेषां पितृभिर्महता प्रयासेन संपादितानां पुस्तकानां संग्रहोऽस्ति । श्रीपंडितैः स्वयमेव संस्थापिता विद्यालक्ष्मीनाम्नी पाठशाला विद्यते । एवं रीत्या तिस्रः संस्थाः संति । तत्र तु यत्किमपि गृहस्थैरुदारमनोभिर्दीयते। तस्योपयोगस्तु सत्कार्ये एव भवति यतः प्रदत्तस्य वित्तस्य विद्यायां भगवत्सेवायां पुस्तकवाचने च भवतीति कृत्वा तिसृषु संस्थासु मध्ये यत्र कुत्रापि विनियोगश्चेत् स महापुण्यप्रदो भवतीति स्फुटतरमेवास्ति । तद्विषये लेखनापेक्षया प्रत्यक्षानुभवतया सिद्धमेवास्ति। एतल्लेखस्याधस्तात् आगाशे गणेशशर्मणा रचिता "श्रीपंडितगट्टूलालप्रशस्तिः" एतन्नाम्ना पंचविंशतिश्लोकास्तु विरहगुणद्योतकाः संति। स आगाशे गणेशशर्मा तु धूल्याख्यनगरे आङ्ग्लपाठशालायां मुख्याध्यापक आसीत्। यदा पंडिताः पुण्यपत्तनेऽगमन् तदा त्वागाशे गणेशशर्मा डेक्कनकालेजमध्येऽध्ययनमकरोत्। तस्मिन्कालेजे त्वेकं नाटकं समारब्धमासीत्। तत्र चारुदत्तस्य यो मैत्रेयस्तस्य भूमिकां समनुप्राप्नोत्। अत एवागाशे गणेशशर्मा यदा यदा पंडितैः सह संगतोऽभूत्।तदा तदा परिहासपूर्वं भवान् मैत्रेय इति स्मरणमकारि।

श्रीपंडितानां शिष्यैस्तथा प्रशिष्यैः कृतानां विरहालापनश्लोकानां स्थापनं तु तत्तन्नामनिर्देशपूर्वकमधस्तात्कृतमस्ति । तथा कविःकाव्यरत्नाकरश्चेति पदवीद्वयधारिणामथुरावास्तव्यभट्टश्रीबलभद्रशर्मणा तु चत्वारः श्लोकाः कृताः संति । पंडितरमानाथभट्टशर्मणा द्वौ श्लोकौ निर्मितौ। श्रीपंडितानां शिष्येण शीघ्रकविपदवीधारिणा भट्टनंदकिशोरशर्मणा त्वेकः श्लोको निरमायि । तथैवान्येन शिष्येण शास्त्रीमाधवजीगोपालजीशर्मणाप्येकः श्लोकोऽव्यरचि । एतत्सर्वमधस्ताल्लिखितं विद्यते ।

श्रीपंडितानां सर्वासां पदवीनां संपादनविचारेण प्रायशस्तेषां जीवनचरितं समागतमेवेति प्रतिभाति । परंत्विदं तु तेषां यौवनावस्थापन्नानां नाम

विंशतिवर्षमारभ्य यावज्जीवं जीवनचरितं विद्यते । तस्मात् बाल्यावस्थायां यत् बुद्धिकौशल्यमध्ययनसमये यदलौकिमवधारणं तथानेकमतिवैचित्र्यं जातं भवेत् । तत्सर्वं ममाज्ञातं विद्यते । किंच पंडितसमवयस्कैः कैश्चिदपि मह्यं तदानींतनं चरितं न निवेदितम् । तस्मान्मयातीवाल्पं जीवनचरितं यावज्ज्ञानं लिखितमस्ति अतएवैतस्य "लघुजीवनचरितम्" इति नाम रक्षितमस्ति । यदा च सर्वं महत् जीवनचरितमितस्ततो लभ्येत । तदा तदपि लेखनीयं भवेदिति शम् ।

**पुण्यपत्तननिवासी**
**लेखको वळे विष्णवाचार्यशर्मा.**

## श्रीमत्पंडितगट्टूलालप्रशस्तिः

श्रीमद्गट्टूलाल आसीन्न कस्य वन्द्यः काव्यास्वादलुब्धस्य पुंसः ।
शास्त्राचार्यः कोऽपि धर्मे विनेता किं किं नासीत्पुण्यराशिः स मूर्तः ॥१॥
संगीतस्य प्राप्य हृद्यं तदङ्गं तेनाभ्यस्तं कालमानं मृदङ्गः ।
ताले ताले मूर्छनाः स्युः कियत्यो वक्तुं शक्तो वाद्यवित्कोऽपि लोके ॥२॥
ज्योतिःशास्त्रं ग्रन्थतोऽधीत्य तेन दैवज्ञानां प्राप्तमग्रेसरत्वम् ।
श्रौते चासील्लब्धवर्णः किमन्यच्छ्रोत्रग्राह्यं तस्य नासीदविन्नम् ॥ ३ ॥
मर्त्ये लोके कोऽप्ययं ब्रह्मवादी पूर्वाचार्यः कौतुकेनावतीर्णः ।
पापं द्रष्टुं दुःसहं चिन्तयित्वा दृष्ट्या हीनोऽयापयत्स्वीयमायुः ॥ ४ ॥
मोहस्थानैः पापबीजैः प्रभूतैः कष्टं क्लिष्टं जन्म मानुष्यकेऽस्मिन् ।
माभूत्पातः संसृताविव्यनेन चक्षुर्वर्जं जीवितं स्वीकृतं नु ॥ ५ ॥
हृत्वा दृष्टिं तत्स्थले तैलबुद्धिं दत्त्वाऽनृण्यं किंनु यातो विरिञ्चिः ।
श्रोत्रप्राप्तं तत्कथं वज्रटङ्कैर्निम्नोत्कीर्णं तस्य हृत्पट्टिकायाम् ॥ ६ ॥
अन्धा नूनं लक्षशः सन्ति लोके यष्टिं धृत्वा प्रस्खलन्तश्चलन्ति ।
स्पर्शं स्पर्शं जानते वस्तु किंचित् प्रज्ञाचक्षुर्लालजीरेक एव ॥ ७ ॥
चक्षुष्मन्तः पापठंत्यक्षराणि दर्शं दर्शं तान्यहो विस्मरन्ति ।
अन्धो हीनः साधनैरप्यभिज्ञो गट्टूलालः कोऽपि तत्रापवादः ॥ ८ ॥
दुर्बोधानि प्रायशः पाठितानि केनास्यासंस्तानि षड्दर्शनानि ।
केनास्यासीत्काव्यबीजं हृदिस्थं गाढप्रेम्णा प्रोक्षितं पोषितं च ॥ ९ ॥

आसीन्मुख्यो यज्ञकल्पे सदस्यः पुण्यग्रामे श्रौतपारंगतोऽसौ ।
आसं धन्यस्तर्हि तद्दर्शनेन याता अब्दाः पञ्चपञ्चा इदानीम् ॥ १० ॥
तस्मिन्काले नैकशो दर्शनाय यातो मित्रैः सार्थमस्याश्रमाय ।
दृष्टोऽपूर्वस्तस्य बुद्धिप्रभावः कालो यातस्तत्स्मृतिर्नैव याता ॥ ११ ॥
मैत्रेयो यश्चारुदत्तस्य मित्रं भूम्नि तस्य प्राप्तवानेकदाहम् ।
दत्ताऽऽव्हा मे सा परीहासपूर्वं तां तं चाहं सास्रमद्य स्मरामि ॥ १२ ॥
योयः श्लोको रङ्गभूमौ मयोक्तस्तंतं प्रेम्णा मामनुव्याजहार ।
यत्सौरस्यं नाट्यबन्धे च तस्मिन् तन्मुद्रायामुल्लसद्दृश्यते स्म ॥ १३ ॥
पश्यामीव व्याघ्रचर्मासनस्थं संध्यायन्तं रक्तकौशेयवस्त्रम् ।
स्निग्धैः शिष्यैः सेवितं सूक्ष्मदेहं श्रीमद्गट्टूलालमद्यापि किंनु ॥ १४ ॥
यो यो यातो दर्शनायास्य सूरेः शिष्यैरूचे स्वागतं तस्य तस्य ।
श्रुत्वा तेषां संस्कृतोक्तिं बटूनां श्रीवाल्मीकेः स्मारितोन्वाश्रमस्य ॥१५॥
चित्रालापाञ्शास्त्रवादानुताहो काव्यं नव्यं स्वादु किंवा पुराणम् ।
भक्त्याऽश्रौषं विस्मयाविष्टचेता गोष्ठीसौख्यं तत्तदद्य स्मरामि ॥ १६ ॥
व्याख्यातारो दर्शनानां भवेयुर्नेदृग्दृष्टा कुत्रचित् काव्यशक्तिः ।
श्लेषः किंवा क्लिष्टशब्दा समस्या या या पृच्छा पूरिता तेन सद्यः ॥१७॥
जातो यावन्नैव चक्षुर्निमेषः पद्यं हृद्यं तेन तावन्निबद्धम् ।
तत्तत्पत्रे शीघ्रमारोपयन्ती कामं क्लिष्टा लेखनी वर्णचञ्चोः ॥ १८ ॥
यद्यत्पद्यं लेखितुं नावकाशः क्लृप्तं तस्य प्रातिनिध्ये नवीनम् ।
मुक्तामालासन्निभाऽनन्तराला नासीत्तुष्ट्यै कस्य सा पद्यधारा ॥ १९ ॥
यावच्चित्ते चिन्तितः पद्यबन्धस्तावद्दत्तं यौगपद्येन तेन ।
नानाकर्मव्यापृतौ भाषणे च वाद्ये गीते क्रीडने चावधानम् ॥ २० ॥
प्रायः षण्णां दर्शनानां प्रवक्ता नैवेदानीं दृश्यते पुण्यभूमौ ।
विद्वद्रत्नं लालजीतुल्यमद्य कुत्रासाद्यं भूतधात्र्यां विशुद्धम् ॥ २१ ॥
धर्म्ये कार्येऽध्यापने शास्त्रचर्चाकाव्यग्रन्थप्रेक्षणादिक्रियासु ।
आयुर्नीतं पुण्यमार्गेण येन गट्टूलालः सोऽद्य नामावशेषः ॥ २२ ॥
एतत्तुल्यः कोऽनु भव्यः कदा वा कस्यां भूमौ पापजुष्टे युगेऽस्मिन् ।
यूरोपीयग्रन्थजिज्ञासयाऽमी आर्यंमन्याः संस्कृतं नाद्रियन्ते ॥ २३ ॥

मयि स्नेहो भूयान् स्वजन इव तस्याभवदथो
न जातो दुर्दैवात् क्वचन सहवासः पुनरपि ।
यथा तस्य प्रेम्णः स्मरणमवशिष्टं मनसि मे
तथा कीर्तिस्तस्य स्फुरति वसुधायां शिखरिणी ॥ २४ ॥
मैत्रेयस्य कृतिर्मुदे दिविषदस्तस्यास्तु शान्तात्मनः
प्रीतिः सैव कदापि या स्वविषयान्नापेक्षते निष्कृतिम् ।
स्मर्तव्योपकृतिस्तथापि सुहृदः सेयं प्रशस्तिः कृता
यस्यासीद्विदुषां सभासु सुचिरं शार्दूलविक्रीडितम् ॥ २५ ॥

आगाशे गणेशशर्मा.

॥ श्रीशः शरणम् ॥

द्रागुत्सार्य तमांसि लोकमखिलं सद्यः प्रसाद्य स्वयं
प्रोल्लास्याऽपि दिगन्तराणि बहलैरेभिः प्रतापोत्करैः ।
संस्थाप्यात्र यशःशरीरममरं सद्भारतस्याऽधुना
मार्तण्डो द्यवि पण्डितो विजयते गोवर्धनाख्यः कविः ॥ १ ॥
यः शास्त्राणि पितुर्दिनैः कतिपयैरन्धोऽपि सन्नाददे
स्वाचार्यव्रजवल्लभेशकृपया बाल्ये वयस्याशु च ।
स्वीकृत्याऽपि सतां मतं मतमसद्येनाऽत्र निःशेषितं
चक्रे किञ्च बुधद्विपेषु ललितं शार्दूलविक्रीडितम् ॥ २ ॥
यत्पाण्डित्यकथाकुतूहलवशा वाराणसीपण्डिता ।
दृष्ट्वैन्द्रीमतिशायिनीं परिषदं सुस्वागतं चास्य तत् ।
काव्येऽमानुषशक्तिमेतदधिकां शास्त्रेषु किञ्चाऽद्भुतां ।
नैतेनैव विसिस्मिरे किमधिकं दन्तैस्तृणं विन्यधुः ॥ ३ ॥
माध्वीकपुंड्रकाणां मृद्वीकामधुसिताऽमृतझरीणाम् ।
अधरीकृतमाधुर्यः स जयति धुर्यः सतां सदसि ॥ ४ ॥

विद्वद्गणविधेयमथुरावास्तव्यभट्टश्रीबलभद्रशर्म्मा

कविः काव्यरत्नाकरश्च ।

---

१ पक्षे अज्ञानानि । २ सूर्यपक्षे प्रतापेनोत्कृष्टाश्च ये करा इति, पक्षे प्रतापराशिभिः । ३ दानादिप्रभवा कीर्तिः शौर्यादिप्रभवं यश इत्युक्तेस्तमसामुभयोर्नाशकत्वाच्छौर्योद्भवं यशो द्वयोरपीत्यभिप्रायः । ४ देवानामित्यर्थः ।

॥ श्रीकृष्णः शरणम् ॥

विहायास्मानन्धे तमसि दिवि यात्रामकृत य-
त्सहस्रांशुर्दैवादिति हि नितरां व्याकुलयति ।
ततोऽप्येतत्कष्टं निशि पुनरिमे द्योतचपलाः
प्रगल्भन्ते स्वैरं वियति बत खद्योतहतकाः ॥ १ ॥
वंशेनोन्नतिशालिना गुणगणैरन्तश्चमत्कारिभिः
काव्यैर्भव्यतमैः परोपकृतिभिः कृत्येन वृत्तेन च ।
अन्विष्टेप्यखिले त्रिविष्टपतले नो लभ्यते यत्समः
स श्रीभारतभूमिवासरमणिः कासां गिरां गोचरः ॥ २ ॥

( विदुषामनुचरो रमानाथभट्टः )

विरहविलापः ।

अवष्टम्भस्तम्भो जगति सुकृतस्याद्य पतितो
गतोऽस्तं मार्तंडोऽन्तरतिमिरविध्वंसनकरः ॥
निमग्ना भूर्नौका भवजलनिधेः पारकरणी-
त्यनर्थाः केनाऽसन्नहह दिवमाप्ते मम गुरौ ॥ १ ॥

शीघ्रकविशास्त्री नंदकिशोर.

हा तैलंगकुलावतंस कविताकांता भवन्तं विना
शोचन्ती विनिहन्ति हंत हृदयं निःश्वासमामुंचति ॥
ध्यायंती भवदंघ्रियुग्मकमलं लोकान् गदंती पुनः
श्रीगोवर्धनधामनामरहितं निर्वीरमुर्वीतलम् ॥ २ ॥

शास्त्री माधवजी गोपालजी ।

## શેઠ માવજી માધવજી દુવારકાદાસ.




જન્મ-સં૦ ૧૯૧૭. વૈકુંઠવાસ સં૦ ૧૯૫૩ શ્રાવણીપૂનેમ.

એમના પુત્ર મેઘજીભાઇને બે દીકરીઓ હતી. જેમાંની મોટી નામે કબુબાઇનો વિવાહ ઠા૦ મૂળજી પરશોત્તમના ચિરંજીવ નામે કાનજી વેરે થયો છે અને બીજી નાની નામે **જેવીબાઈ** હજી કુંવારી છે.

તેમના વૈકુંઠવાસ વખતે એક પુત્રી જમનાબાઇ કરીને હતી. તે પણ થોડા માસ પછી દેવલોક પામી છે.

તેઓ "વિદ્યાવિલાસી" હતા. એની સાબીતી આ સ્વધર્મના ગ્રંથપ્રકાશ માટે તેમણે વિલમાં લખેલી રકમથી માલમ પડે છે એટલું જ નહિ પણ, તેઓ પંડિત શ્રીગટ્ટુલાલજી સ્થાપિત વિદ્યાલક્ષ્મી સંસ્કૃત પાઠશાળા વગેરે નિશાળોના વિદ્યાર્થીઓને વારંવાર ગ્રંથોનું દાન ( બક્ષિસ ) આપતા હતા. એક વખતે તો તેમણે ગોસ્વામી શ્રીમદ્ **દેવકીનંદનાચાર્યજી**ના પ્રમુખપણા હેઠળ તેમની ચંદાવાડીમાં વિદ્યાર્થીઓને ઇનામ આપવાનો મોટો જાહેર મેલાવડો કર્યો હતો.

તેઓ એવાતો ધર્માગ્રહી હતા કે પોતે જે વેપાર કરતા તેમાં જે કંઇ નફે મળતો તેમાંથી સેંકડે ૧૦ ટકા ધર્માઉમાં ખરચવાનો તેમણે તથા શેઠ અમરચંદ માધવજીએ સાથે મળી ઠરાવ કીધો હતો. એટલું જ નહિ, પરંતુ બીજા વેપારીઓ ધર્માઉ ખાતાના પૈસા પોતાના ચોપડામાં અનેક વર્ષ સૂધી જમા રાખી મૂકે છે, તેમ તેઓ કરતા ન હતા; તેઓ એક વર્ષના નફાનો દશાંશ બીજું વર્ષ પૂર્ણ થવા પૂર્વે બધો ખરચી દેતા હતા, અને તે નિયમ હજી પણ તેમની પેઢીમાં ચાલે છે. **सत्यानृतं तु वाणिज्यं** વેપારમાં તો સાચું જૂઠું બેઉ હોય, એમ ઘણા બોલે છે તથા તેમ વર્તે છે, પરંતુ આ **માવજીશેઠે** પોતાના મિત્રો સાથે પ્રતિજ્ઞા લીધી હતી કે મારે સાચું બોલીને જ વેપાર કરવો, ત્યારથી તેઓ વેપારમાં પણ એકજભાવ કહેતા અને જે કહેતા તેજ લેતા હતા.

તેઓના ગોલોકવાસ પછી પણ તેમના વિલમાં લખ્યા મુજબ રૂ. ૩૦૦૦) તથા પોતાની તરફના રૂ. ૧૦૦૦) મળી કુલ રૂ. ૪૦૦૦) આપી, ઉમરગામમાં શેઠ અમરચંદે "શેઠ માવજી માધવજી"ના નામથી હાઇસ્કૂલ બંધાવી છે. તથા વૈષ્ણવોનું પરમપૂજ્ય સ્થળ જે શ્રીનાથદ્વારા ત્યાંપણ યાત્રાળુની સગવડમાટે રૂ. ૧૮૦૦૦) ખર્ચીને તેમના નામથી એક **ધર્મશાળા** બંધાવી છે.

**આવા સ્વધર્મનિષ્ઠ સદ્‌ગૃહસ્થનો વિશેષ વૃત્તાંત અદ્યાપિ અમને ન મળવાથી, આટલો સંક્ષિપ્ત વૃત્તાંત આપવાની અમને ફરજ પડી છે. જો વિશેષ વૃત્ત અમને મળશે, તો તે પણ હવે પછીના પુસ્તકોમાં પ્રગટ કરીશું.**

---

# "વૈષ્ણવ ધર્મ ગ્રંથમાળા"નો હિસાબ.

## જમા.

૧૨૨। બાકી મળી ૧ લા પર છાપેલા હિસાબ પ્રમાણે.
૩૦ તા. ૧ જુલાઈથી તા. ૩૧ ડિસેંબર ૧૯૦૪ સુધી ૬ માસનું વ્યાજ.
૩૦ તા. ૧ લી જાનેવારીથી તા. ૩૦ મી જુન ૧૯૦૫ સુધી ૬ માસનું વ્યાજ.
૩૦ તા. ૧ લી જુલાઇથી તા. ૩૧ ડિસેંબર ૧૯૦૫ સુધી ૬ માસનું વ્યાજ.
૩૦ તા. ૧ લી જાનેવારીથી તા. ૩૦ જુન ૧૯૦૬ સુધી ૬ માસનું વ્યાજ.
૩૦ તા. ૧ લી જુલાઇથી તા. ૩૧ ડિસેંબર ૧૯૦૬ સુધી ૬ માસનું વ્યાજ.
૩|= દશાવતારસ્તોત્ર નંગ ૫૦ ના વેચાણના.

૧૭૫|= કુલ જમા.

## ખર્ચ.

"સત્સિદ્ધાંતમાર્તંડ"ના પ્રથમ કિરણની
લખામણીના શાસ્ત્રીને—૧૫-૦-૦
છપામણી તથા બંધામણી રૂ. ૯૪-૦-૦
પ્રત ૧૦૦૦ ની.—
બાકી શિલક———— – – ૬૬-૬-૦

કુલ. ૧૭૫-૬-૦

## અંક ૧ લો "દશાવતારસ્તોત્ર" ના નંગમેળનો હિસાબ.

| નંગ. | જમા. | નંગ. | ખર્ચ. |
|---|---|---|---|
| ૧૦૦૦ | છપાવ્યાં તે. | ૫૦ | ભેટ મોકલ્યાં તથા બક્ષિસ આપ્યાં તે. |
| ૧૦૦૦ | | ૫૦ | વેચાણ થયું. |
| | | ૯૦૦ | શિલક છે:— ૩૦૦ વગર બાંધેલાં. ૬૦૦ બાંધેલાં. |
| | | ૧૦૦૦ | |

વિ. રા. દલાલ.
માનાધિકારી વ્યવસ્થાપક.